॥ सूर्यस्तुती द्वादशार्या साम्बकृत ॥

अथ श्रीसाम्बकृतद्वादशार्यासूर्यस्तुतिः ।

उद्यन्नद्यविवस्वानारोहन्नुत्तरां दिवं देवः ।
हृद्रोगं मम सूर्यो हरिमाणं चाशु नाशयतु ॥ १॥

निमिषार्धेनैकेन द्वे च शते द्वे सहस्रे द्वे ।
क्रममाण योजनानां नमोऽस्तुते नलिननाथाय ॥ २॥

कर्मज्ञानखदशकं मनश्च जीव इति विश्वसर्गाय ।
द्वादशधा यो विचरति स द्वादशमूर्तिरस्तु मोदाय ॥ ३॥

त्वं हि यजूऋक्सामः त्वमागमस्त्वं वषट्कारः ।
त्वं विश्वं त्वं हंसः त्वं भानो परमहंसश्च ॥ ४॥

शिवरूपात् ज्ञानमहं त्वत्तो मुक्तिं जनार्दनाकारात् ।
शिखिरूपादैश्वर्यं त्वत्तश्चारोग्यमिच्छामि ॥ ५॥

त्वचि दोषा दृशि दोषाः हृदि दोषा येऽखिलेन्द्रियजदोषाः ।
तान् पूषा हतदोषः किञ्चिद् रोषाग्निना दहतु ॥ ६॥

धर्मार्थकाममोक्षप्रतिरोधानुग्रतापवेगकरान् ।
बन्दीकृतेन्द्रियगणान् गदान् विखण्डयतु चण्डांशुः ॥ ७॥

येन विनेदं तिमिरं जगदेत्य ग्रसति चरमचरमखिलम् ।
धृतबोधं तं नलिनीभर्तारं हर्तारमापदामीडे ॥ ८॥

यस्य सहस्राभीशोरभीशु लेशो हिमांशुबिम्बगतः ।
भासयति नक्तमखिलं भेदयतु विपद्गणानरुणः ॥ ९॥

तिमिरमिव नेत्रतिमिरं पटलमिवाशेषरोगपटलं नः ।
काशमिवाधिनिकायं कालपिता रोगयुक्ततां हरतात् ॥ १०॥

वाताश्मरीगदार्शस्त्वग्दोषमहोदरप्रमेहांश्च ।
ग्रहणीभगन्धराख्या महतीस्त्वं मे रुजो हंसि ॥ ११॥

त्वं माता त्वं शरणं त्वं धाता त्वं धनं त्वमाचार्यः ।

त्वं त्राता त्वं हर्ता विपदामर्क प्रसीद मम भानो ॥ १२॥

इत्यार्याद्वादशकं साम्बस्य पुरो नभःस्थलात् पतितम् ।
पठतां भाग्यसमृद्धिः समस्तरोगक्षयश्च स्यात् ॥ १३॥

इति श्रीसाम्बकृतद्वादशार्यासूर्यस्तुतिः सम्पूर्णा ।